श्रीगोवर्द्धनाचार्यप्रणीता

# आर्यासप्तशती

मैथिलश्रोत्रियमिश्रोपाह्वभवानीनाथापरनामकमहामहोपाध्याय
श्रीसचलविरचितया रसप्रदीपिकाटीकया सहिता

टीकाकारस्य प्रपौत्रेण मिश्रोपाह्वपण्डित
**श्रीकेशीशर्मणा**
प्रकाशिता

१९८७ वि०

मूल्यम् १।)

THE

# ARYASAPTASATI

OF

# GOVARDHANACHARYA

WITH

## THE COMMENTARY ( RASAPRADIPIKA )

OF

Maithil Shrotriya Mahamahopadhyaya
PANDIT SACHAL MISRA ( Otherwise known as BHABANINATH )

PUBLISHED BY

*His great grand son*

**Pandit Keshi Misra B. A.**

**1931.**

**Rs 1 8—0**

**आदाय सप्ततन्त्रीचितां विपञ्चीमिव त्रयीं गायन् ॥**
**मधुरं तुरङ्गवदनोचितं हरिर्जयति हयमूर्द्धा ॥ १५ ॥**

आदायेति, हयमूर्द्धा हयग्रीवो निखिलविद्याधरो हरिर्जयति सर्वोत्कर्षः सकलविद्याधाता भवतीत्यर्थः, तुरङ्गवदनस्य मयोरुचितं योग्यं मधुरं गायन् गानं कुर्वन् इत्यर्थः हयमुखस्य तथा गानमुचितमेवेत्याशयः त्रयीं धर्मविधानकारिकामृग्यजुस्सामरूपामादाय परिगृह्येत्यर्थः त्रयीपदेनाथर्वणप्रतिपादितव्यवच्छेदकत्वेन शुद्धधर्ममार्गप्रवर्त्तकत्वेनाभिमङ्गलप्रदो विष्णुरित्यावेद्यते अतएव मङ्गलप्रकरणे स्मरणमिति, त्रयीं किम्भूतां सप्ततन्त्रीचिताम् सप्तमङ्गलाकाग्निष्टोमादिग्रन्थ चितां व्याप्तामित्यर्थः वीणापक्षे सप्तानां तैद्वतन्त्रीणां समाहारस्तन्त्रस्यवासामित्यर्थः विपञ्चीमिव परिवादिनीमिव क्वचित् तन्त्रोचितामिति पाठः, तन्त्रोच्चारितां पक्षे वादितामित्यर्थः, एतश्च यथा कश्चिद्गन्धर्वः सर्वाधिकसुखजनकं गायति, तथा हयग्रीवस्त्वदा वेदगानं करोतीति तुरङ्गवदनोमयुरिति चामरः॥१५॥

**स जयति महावराहो जलनिधिजठरे चिरं निमग्नापि ॥**
**येनान्त्रैरिव सहफणिगणैर्बलादुद्धृता धरणी ॥ १६ ॥**

स इति, स प्रसिद्धो महाकायो वराहः शूकरो यज्ञवराहरूपो विष्णुरित्यर्थः जयति नवीनसृष्टिकारीभवति, इत्यर्थः येन धरणी उद्धृता जलोपरि स्थापिता बलात् बलाधिक्यात् एतश्च द्वितीयः कोपि न तादृशइत्यर्थः फणिगणैस्सह सर्पसमूहैस्सह एतश्च शीघ्रत्यापि पृथिव्यधःस्थस्योद्धार इति व्यज्यते, अन्त्रैरिव तीक्ष्णकुटिलस्यूदन्तसम्बन्धात्, अन्तर्गतनाडीसमूहसर्पसमूहसहितपृथिव्युद्धार इत्यर्थः जलनिधेः समुद्रस्य जठरे उदरे चिरं चिरकालं निमग्ना, अत्यन्तं मग्नापीत्यर्थः तथाच अङ्गनिधानस्थाने विश्वम्भरावस्थानमनुचितमिति निस्सरणयोग्यत्वं चिरं निमग्नापीत्यनेन वराहपदाद्यरिवादिनामपि न तदुद्धारसामर्थ्यमिति व्यज्यते ॥ १६ ॥

**ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि ॥**
**स्फारे यत्फणचक्रे धराशरावश्रियंवहति ॥ १७ ॥**

ब्रह्माण्डेति, जनान् अर्दयति राक्षसान् पीडयति इति जनार्दनो विष्णुस्तं नौमीति संबन्धः एतश्च सकलप्रतिपक्षनाशकत्वेनास्माकं स एव नमस्य इत्याशयः

ब्रह्माण्डानि　　　कुम्भा कल्मास्मान् करोतीति

[illegible]

जीवनमङ्गलनया, घटनिर्माणे कुलालस्य भ्रान्तिस्वभावात्प्रथमस्तथास्यापीत्या- वेद्यते, चेतनस्यापि स्वोपाधिदित्वेन ब्रह्माण्डपदेन चेतनानपेक्षितद्रव्यत्वेन लीलार्थं सृष्टिकरणमुच्यते. भुजगस्य भोगस्याकार इवाकारो यस्य तमित्यर्थः, अनेन विष्णोः कुलालत्वमुक्त्वा दक्षत्वं ध्वनति. यत्फणचक्रे प्रतिब्रह्माण्डैकैकफणसमूहे इत्यर्थः, धरा पृथ्वी शरावस्य वर्धमानस्य श्रियं शोभां वहति धारयति, ननु तर्हि पूर्वश्लोके धरा शेषेणैव कथमभूदित्याशङ्क्याह, स्फारे सृष्टिकरणसमये विस्तृते इत्यर्थः तथाच फणासङ्कोचविकासवशादेव धराया मण्डलाकारोपरि स्थितिरित्याशयः यद्वा स्फारे प्रचुरे नागस्यास्य फणचक्रे फणासमूहकुलालचक्रे, पद्मप्रति ब्रह्माण्डमेकैक- फणसमूहे निपुणब्रह्माण्डमेकैकफणायत्तत्वमित्याशयः एतेन शरावश्रियं वहति इत्यनेन व्यञ्जनया लब्धस्य फणाविस्तृतत्वस्य वाचकपदोपादाने उत्तमकाव्यत्वहानि- रित्यपास्तं चिरकालावबोधकत्वादित्याशयः सकलकारणरूपी भगवान् उत्पत्तिस्थि- तिलयान् ब्रह्मविष्णुशिवरूपेण करोतीति, कुम्भकारादिपदैर्व्यज्यते कुलालश्चक्रे मृदा शरावनिर्माणं करोतीति लोकसिद्धम् ॥ १७ ॥

चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति ॥
शङ्करपर्यन्तजितो वीरस्तम्भः स्मरस्येव ॥ १८ ॥

चण्डीति, चण्डीजङ्घाकाण्डः प्रशस्ता चण्डीजङ्घा जयति, प्रकर्षेण शोभत इत्यर्थः प्रिये शङ्करे शिरसा मस्तकेन चरणस्पृशि सति मानापनोदार्थं पादानते सतीत्यर्थः क इव स्मरस्य मदनस्य वीरस्तम्भ इव शौर्यसूचकध्वजादण्ड- विशेष इवेत्यर्थः शङ्करपर्यन्तं शङ्करमभिव्याप्य जितो येन स इत्यर्थः तथाच शङ्करमात्रेण जितस्य मदनस्य सकलजितमदनयशतया जितशङ्करश्रीचरणतिरस्त्वेन शम्भोः शिरोनते तत्तुल्यद्वितीयवीरस्तम्भारोपस्य वीरजयसूचकध्वजोत्थापनमुचितमेवेति, शङ्करपर्य- न्तजित इति स्मरविशेषणं वा शङ्करपर्यन्तं जयतीति तथा तस्येत्यर्थात् कश्चिद्वीरेत्यादि पाठस्स मानोऽर्थस्तत्र ॥ १८॥

उन्नालनाभिपङ्केरुह इव येनावभाति शम्भुरपि ॥
जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ १९ ॥

उन्नालेति, शैलकन्यायाः पार्वत्याः तत् आननं वदनं जयति, शिवस्य विष्णु त्वसम्पादकत्वादित्याशयः किम्भूतायाः पुरुषायितायाः पुरुष इवाचरन्त्याः विपरीतर- तासक्ताया इत्यर्थः तत् कुतः, येनाननेन शम्भुरपि शिवोऽपि उन्नतनालं नाभिदेशस्थं पङ्केरुहं पद्मं यस्य स विष्णुमिव शोभत इत्यर्थः पुरुषा स्थितापा-

शैल कन्यायाः अङ्कयष्ट्या उद्गतनाल सदृशत्वात् आननस्यच कमलतुल्यत्वादि-तिभावः ॥ १९ ॥

अङ्कनलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ ॥
सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ २० ॥

अङ्केति, हिमालयपुत्र्याः स्तनौ कुचकरिकुम्भौ जयतः अमृतापानेन शिशुसु-खदायकत्वप्रकर्षेण युक्तौ भवतः, सस्मित ईषद्धसितोऽन्येनैवप्रकाशितत्वाद्धासः हरस्तस्य कराभ्यां कलितौ गृहीतावित्यर्थः अङ्के क्रोडे निलीनो गुप्तो यो गजानन, गणेशस्तस्य शङ्कयाऽऽकुलः गुप्तचौर्य्यक्रीड़या निलीय स्तनपानशङ्काख्या कुलताहेतुः गजाननपदेन करिकुम्भतुल्यदेवीस्तनयोभ्र्मयोग्यत्वं व्यज्यते, बाहुलेयः कार्त्तिकेयस्तेन हृतवसनौ कश्चिज्जयतामितिः पाठः ॥ २० ॥

कण्ठोचितोऽपि हुङ्कृतिमात्रनिरस्तः पदान्तिके पतितः ॥
यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥२१॥

कण्ठेचित इति सा सर्वकोपनाधिका चण्डी जयति, उत्कृष्टा भवतीत्यर्थ यस्याः पदान्तिके चरणसमीपे पतितः चन्द्रशेखरः शिवः कण्ठोचितोऽपि कण्ठ-ग्रहणयोग्योऽपि पक्षे ऽर्धचन्द्राकार योगितया कण्ठस्पर्शस्ययोग्योऽपि, प्रथमपक्षेऽपि-विरोधे द्वितीये सामर्थ्याधिक्येहुङ्कारमात्रेण नतु बलेन निरस्तः पक्षे वेगशून्यः अतएव पदान्तिके चरणप्रान्ते पतितः प्रणत इत्यर्थः पक्षे पदसमीपे भूमौ पतितः स्मरभल्लनिभः कामस्यार्द्धचन्द्राकारशरसदृशः भल्लोऽर्धचन्द्राकारः शर इत्यर्जुन-मिश्रः भल्लः शरव्याकारः काष्ठलौहमयोस्त्रविशेषो मैथिलभाषया भाला इति प्रसिद्ध इतिकेचित् यद्वा यस्या हुंकारमात्रनिरस्तो मदनास्त्ररूपोऽपि शिवस्तच्चण्डीको-पनेत्यर्थः चन्द्रशिख इत्यनेनोद्दीपकत्वं स्मरभल्लनिभइत्यनेन च मानापनोदनसा-मर्थ्यंव्यज्यते ॥ २१ ॥

देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् ॥
जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ २२ ॥

देव इति, देवे विपणौसुरासुराधिकदीप्तिशालिनि, अतएव सर्वान् सुरासुरा-नतिक्रम्य समुद्रप्रयत्नोत्थितया श्रियाऽर्पिता दत्ता वरणस्रक् स्वयंवरमाला यस्मिन् बहुमाये स्वेच्छया स्वरूपधारके, अतएव कैटभीरूपमसुरमोहनार्थं स्त्रीरूपो विष्णुर-भूत्तस्या कैटभीशब्दो मधुरति सम्प्रदाय वहति धारयति सति यद्वा कैटभीनायिका

किटेन गमनेन किटस्थी गनाविति , भा शोभा यस्य सा किटभ सर्वाश्चर्यमयो विष्णुरित्यर्थः तस्य देहः कैटभः तस्येयं स्त्रीरूपा कैटभीत्यर्थः यद्वा किटेन ज्ञानगत्यर्थोऽज्ञानार्थं इतिहेतोः आयुर्घृतमितिवत्, ज्ञानजनकेनेत्यर्थः तथात्र सर्वेषां सर्वप्रकारकज्ञानजनकरूपधारणेन भा दीप्तिर्यस्य सकिटभः तस्य देहो यस्स कैटभस्तस्येयं कैटभीत्यर्थः तेनामृतमथनेऽमृतभाण्डेऽसुरेणनीते, असुरमोहनार्थं मोहिनीस्त्रीरूपं विष्णुना यत्कृतं तत्कैटभीपदवाच्यम् यद्वा तमोगुणमयो विष्णुमनःसम्भूतो दैत्यः कैटभस्तस्य स्त्री रूपत्तिः कैटभीत्यर्थः मधुकैटभयोर्व्यासम्भवात्सीत्यैव समुद्रमथनोद्भूता लक्ष्मीरूपा भगवता वृतेति पुराणम् मधुकैटभयोस्तमोमूलत्वं पुष्करे एवञ्च कैटभीरूपमित्यस्य लक्ष्मीरूपमित्यर्थः पर्य्यवस्यति, यद्वा कैटभस मोहनकर्त्री, कैटभी महामाया, इत्यर्थः कैटभीशब्दस्य महामायायां रूढिर्वा तत्स्वरूपमित्यर्थः, पञ्चवर्षसहस्रकालं मधुकैटभ विष्णुयुद्धो जयार्थः महामायाचिन्तैकतानो व्याकुलो विष्णुर्म्महामायां प्रसन्नामकरोत्सतो त्रेण, सागत्य विलक्षणस्वरूपेण मधुकैटभौ वरदानोत्सुकौ कृत्वा विष्णवे मधुटभवध-रूपंवरंदायपित्वा तयोर्व्वधंसम्पाद्य, स्तुवतो ब्रह्मविष्णुशिवान् देवीलोकं नीत्वातत्र बहुकालं स्त्रीरूपेण संस्थाप्य पश्चात्तानत्वा पुंस्त्वं विधाय तान् स्वगेहमनयद्देवीति देवीपुराणम्, महामायाविमोहिनाविति मार्कण्डेयपुराणञ्चेति एव महामाया कैटभीत्युच्यते, सुरासुराभ्यां हसिता उपहसितेत्यर्थः लज्जया स्त्रीकरणेन, चिन्तेति-पाठे किं भविष्यती चिन्तयेत्याशयः, जिह्मं च क्रमीक्षणं यस्यास्सेत्यर्थः लक्ष्मीर्जयति, नातीव व्याकुला धैर्यान्वितीत्यर्थः, यद्वा जयति, स्वेच्छयाऽसुरमोहनार्थं कृत कौतुकं हरिं दृष्ट्वा हसन्ती पूर्ववत् शोभत इत्यर्थः विभूता सुरासुराहसितापि, चिन्ताशून्येत्यर्थः तत्कृतलज्जाशून्येति वा, अतएवाकुटिलेक्षणा, विष्णोस्तत्त्वपरि-ज्ञानात्कापि चिन्ता नास्तीति समुदायार्थः। २२ ॥

**तानसुरानपि हरिमपि तं वन्दे कपटकैटभीरूपम् ॥**
**यैर्यद्बिम्बाधरमधुलुब्धैः पीयूषमपि मुमुचे ॥ २३ ॥**

तानिति, असुरानपि वन्दनायोग्यानपि, अधररसज्ञत्वेन वन्दे प्रणमामीत्यर्थः छलकैटभीरूपं हरिमपि वन्दे इत्यन्वयः, उभय समुच्चयेऽपिःसर्वथा हरेरेव विज्ञत्वं नदेवानामितिव्यङ्ग्यम् हरिवन्दनंह्यमृताधिकाधरप्रकाशनात्, तान् कान् यैरसुरैः यस्याः कैटभ्याः बिम्बफलसदृशाधरगतं यन्मधु तल्लोभयुक्तैरधरामृतप्राप्तिशङ्कितैरित्यर्थः पीयूषमपि अजरामरणाहारकमपि महताश्रमेणोत्पादितं परित्यागानर्हं निश्चितप्राप्तिकं मुमुचे इत्यस्यम् २३ ॥

तल्पी कृताहिरगणितगरुडो हाराभिहतविधुर्जयति ॥
फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ २४ ॥

तल्पीति, श्रियः केलिः जयति— बहुनरविघ्ने वर्त्तमानेऽपिनिरन्तरं निर्वहतीत्यर्थः तल्पीकृताहिः शय्यीकृतशेषनागः भगवतः शेषशायित्वात् अनेन क्षीरसमुद्रस्य पितुरङ्के स्थितायास्तल्लज्जा नेति गम्यते, अगणितोऽवहेलितो गरुडो येन, अनेन सर्वत्र प्रसिद्धा भीर्नेति व्यज्यते विपरीते हारेण हतस्ताडितो धारव्यापारेण विधिः पितामहो येन, अयं कुतो नापसरतीति क्रोधादिति भावः व्यञ्जना पूर्ववत्, फणशतेनबहुभिः फणाभिरित्यर्थः शतशब्दस्य बहुत्वविशिष्टमात्र परत्वात् सहस्रशीर्षेत्यादिवत् अन्यथा सहस्रफणस्य शेषस्य फणानां शतत्वकथने न्यूनता पत्तेः फणशतेन पीतः श्वासः सुरतश्रमश्वासो यस्य, अनेन प्राणभीतिर्नेति व्यज्यते, कस्या इव रागान्धायाइव, इवार्थस्य गम्यमानत्वादन्यथा, रागान्धाया इत्यस्य श्रियो विशेषणत्वे पूर्वविशेषणैर्व्यङ्ग्यस्य रागान्धत्वस्य शब्देन कथने वाच्यत्वच्युतेत्यादिवदुत्तमकाव्यत्व हान्या पत्तेः ॥ २४ ॥

स्मेराननेन हरिणा सस्पृह माकारवेदिनाकलितम् ॥
जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ २५ ॥

स्मेरेति, कमलायाः लक्ष्म्याः सस्पृहं यथा स्यादेवं कैटभीध्यानं जयति, स्त्रियापि स्त्रीध्यानस्य क्रियमाणत्वात् पुरुषायिता, अहमेव पुरुषः इयन्तु कैटभी रूपा मदीया स्त्री, इतिध्या नेन विकाराभिव्यक्त्यात्, पुरुषवद्व्यापारं कुर्वन्त्या इत्यर्थः ध्यानं हरिणा कलितमनुमितं हेतुगर्भविशेषणमाह, आकारवेदिनेति, आकारं ध्यानकर्त्तुः स्वरूपं वेदितुं ज्ञा तुं शीलमस्येति, आका रवेदी हरिस्तेन तथाचाहेतुकमेव ध्यानानुमानम्, आकारवैलक्षण्यन्तु, अननुभूतसुखादिति भावः पूर्वाननुभूत सुखार्त्त स्मेराननेन मन्दहासेन हरिणेत्यर्थः स्मेराननेन लक्ष्म्याः सहास वदनेन हेतुना हरिणा सस्पृहं कलितं हरिणापि स्मेराननेनेति व्याख्यानमत्रम् ॥ २५ ॥

कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः ॥
पीरितविनतालिङ्गो नाभि सरोजे विधिर्जयति ॥ २६ ॥

कृतेति कृतं कान्तेन अन्यस्त्रीगणैरनुच्छिष्टमुखेन हरिणा केलौ कुतुकं यया कान्त कान्ताशब्दयोर्मध्यनाद्रे तथासंकेतात् केलिशब्देन शरीरव्यापारः कुतुकपदेन पाचलिक इत्ति पौनरुक्त्यं यद्वा केलौ परिहासे कुतुकं कौतूहलं समुत्सुकत्वं कृतं यया ईदृशी या श्रीरित्यर्थः नतु नात रेतस्वरूपेन मक्ता

भ्रमि :शीतराश्नौ शीता: शीतला ये श्रिय: श्वासास्तेषां य: सेक: सेकपदेन द्रवीभाव उच्यते तेन निद्राण:, अतिद्रव त्वेन विकाराभावादिति भाव: घोरिनं निद्रित-नासाशब्दितं विततालिरुतं विततालिरुतमिव यस्येत्यर्थ: विततं विस्तीर्णं यदलिरुतं भ्रमरशब्दितं तद्वदिति वार्य-स निशि गांविसरोजे जयति श्री: शीतलसुगन्धि मन्दवातेन प्रजाणां स्वापयति प्रजा सुप्तो ऽपि नासाशब्देन भ्रमरझंकारानुकारिणा उद्दीपनेन लक्ष्मीमुपकरोतीति समुदायार्थ इति तत्त्वम् द्रवकेलिपरीहासा: क्रीड़ा खेला नर्म च इति कौतूहलं कौतुकञ्च कुतुकं च कुतूहलमिति चामर: ॥ २६ ॥

एकरद द्वैमातुर निस्त्रिगुण चतुर्भुजापिपञ्चकर ॥

जयषण्मुखनुत सप्तच्छदगन्धिमदाष्टतनुतनय ॥ २७ ॥

एकेति एकदन्त हेगणेश जयेति जययुक्तो भव द्वैमातुर गङ्गापार्वतीमा-तृद्वयमस्येति दुर्गाचण्डिकाभ्यां पालितत्वाद्वा निस्त्रिगुण निर्गुणब्रह्मस्वरूप चत्वारो भुजा यस्य पञ्चकर चतुर्भुजस्य पञ्चहस्तत्वे विरोधेऽपि: करशब्दस्य शुण्डादण्डवाचित्वेन परिहार: षण्मुखनुत कार्तिकेयेन प्रणत ज्येष्ठभ्रातृत्वात् सप्तच्छदस्य विषमच्छदस्य गन्धतुल्यगन्धोमदो यस्य स तथा- तत्संबोधनेसप्तच्छ-दगन्धिमद अष्टतनु: पृथिव्याद्यष्टमूर्ति:शिवस्तत्पुत्रेत्यर्थ: ॥ २७ ॥

मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम् ॥

यद्दानतोयतरलैस्तिलतुलनालम्भि रोलम्बै: ॥ २८ ॥

मङ्गलेति तं गजवदनं गजस्य वदनमिव वदनं यस्य स तम्, शनिना दृष्टस्य, गणपतेर्वदनं पतितं तत्रसूतस्य गजस्य कर्त्तितेन वदनेन गणेशशरीरसन्धानमकरोत् शिव:, शनैश्चरोऽपि पलायनपतित: पङ्गुरभवदिति पुराण प्रसिद्धि: तं गणेशं अदम्भेन, अकपटेन अनेन कापट्ये दैवतभजनेऽपि नैष्फल्यमितिध्वन्यते हेजना यूयं विघ्नविनाशरसिका: भजततस्यभजनं कुरुत किम्भूतं गणेशम्, मङ्गल कलशद्वयम यकुम्भम् मङ्गलार्थं कल्याणार्थं यत्कलशद्वयं तन्मयं तत्स्वरूपं कुम्भस्थलं यस्य तं, तं यद्यस्य गणेशस्य दानतोयेन मदजलेन तरलैश्चञ्चलै: रोलम्बै: भ्रमरै: तिल तुलना श्यामतिलानां सादृश्यं श्यामत्वात् अलम्भि अलाभीत्यर्थ: यथा महा दानदाता कश्चिन्मङ्गलकलशादिस्थापनं विधाय सलिलेन जलेन याचकमनोरथान् पूरयति एवमेवायं गणपति: विघ्ननाशार्थिभ्यो विघ्ननाशन्ददाति इति सर्वदेवा-पेक्षयास्य श्रे ते ॥ २८ ॥

वाम्याचरणप्रवणौ प्रणमत तौ कामिनीकामौ ॥ २९ ॥

याभिरिति तौ ताश्च तश्च ताविति विग्रहः कामिनीकामौ, कामिनीः कामञ्चेत्यर्थः भिन्नवचनयोरपि जीवात्मपरमात्मानौ गोपीकृष्णावित्यादिवद्दर्शनात् प्रणमत नमस्कुरुतेत्यर्थः ताः काः याभिः स्त्रीभिः अनङ्गः कन्दर्पः साङ्गीकृतः सहकारियुक्तः कृतः स्त्रीव्यतिरेकेण मदनस्य व्यर्थत्वादिति भावः तं कं येन मदनेन स्त्रियः अस्त्रीकृताः युवजनमोहनविजयादौ अस्त्ररूपाः कृताः, तौ प्रणमत इत्यन्वयः किम्भूतौ वाम्याचरणप्रवणौ विपरीताचरणकुशलावित्यर्थः, परमेश्वरेण अनङ्गः कृतः स्त्रीभिस्तथा साङ्गः सशरीरः कृतः इत्येकं विपरीतं परमेश्वरेण स्त्री कृता मदनेन सैव अस्त्री स्त्रीभिश्च कृतेति अपरं विपरीतं तथाचानेन विरोधाभासालङ्कारेण परमेश्वराधिककार्यकारणेन व्यतिरेकालङ्कारस्सूच्यते, तेनात्र सकलदेवस्तुत्यादिमंगलापेक्षया कामिनीकामप्रणामस्याधिकमंगलत्वं सूच्यते, अतएवास्य सकलदेवस्तुत्यनन्तरं निर्देशः किञ्च आचर्यते क्रियते, इत्याचरणं वाग्व्यापारः शरीरव्यापारश्चोच्यते तदेवाचरणं वाम्यं वामभावः विपरीतरूपमित्यर्थः तथाच कामिनीकामचेष्टितस्य यावन्तो व्यापाराः तत्कुशला ये विदग्धाश्च त एवात्र काव्ये मत्कृतेऽधिकारिणः नत्वविदग्धा इति व्यज्यते व्याम्यं सुन्दरं यदाचरणं तत्प्रवणावित्यर्थो वा वामदेवरामवत्सुन्दरवाची वामशब्दस्य सुन्दरवाचित्वादित्येके । ॥ २९ ॥

विहितघनालङ्कारं विचित्रवर्णावलीमयस्फुरणम् ॥
शक्रायुधमिव वक्रं वल्मीकभुवं कविं नौमि ॥ ३० ॥

कवीनां स्तोत्रस्य सर्वाभ्यर्हितत्वात्, आदिकवित्वेन प्रथमोपस्थितत्वाच्च वल्मीकिं स्तौति विहितेति, वल्मीकभुवं नाकुभवं भूनकूटविशेषात्सञ्जातं कविविशेषं हिमवतो गंगा प्रभवतीत्यादिवत् भूधातोर्दर्शनयोग्यत्वमर्थः पथिककोटिहननिरतः मरा इत्यक्षरद्वयजापकेन केनचित् धूर्तेन नियुक्तः स तथा जपन्नासीत् पूर्वपुण्येन रामइतिसम्पन्नं तदक्षरद्वयं ततोऽतिदीर्घकालेन तस्योपविष्टस्य तस्य भूरः स्थगता अभवदथ ततो निस्सृतः अतएववाल्मीकिनामादिकविः स एव, तं कविं नौमीति सम्बन्धः कथंभूतं वक्रं वक्रोक्तिकुशलं ध्वनिकाव्यनिर्माणसमर्थमिति यावत् पक्षे भुग्नम् विहिताः स्वकाव्यायहिताः घनाः नानाविधाःअलङ्कारा उपमादयो येन स तथात मित्यर्थः पक्षे विहिताः कृताः घनानां मेघानामलङ्कारा भूषणानि येन तत्तथेत्यर्थः विचित्रा अभिनवा पूर्वं अ नसादृश्यरहितेत्यर्थः वर्णावली तन्मयं तत्प्रचुरं स्फुरणं

स्फूर्त्तिः स्वाभाविकवचनव्यापारो यस्य स तथेत्यर्थः पक्षे विचित्रवर्णा रक्तपीत-श्यामवर्णाः तेषामावली पङ्क्तिस्तन्मयं स्फुरणं प्रकाशो यस्य तत्तथेत्यर्थः शक्रायुधमिव इन्द्रधनुरिवेत्यर्थः कविं पण्डितं काव्यसामर्थ्येनपूर्वमुक्त-त्वादिति ॥२०॥

व्यासगिरां निर्य्यासं सारं विश्वस्य भारतं वन्दे ॥
भूषणतयैव संज्ञां यदङ्किता भारती वहति ॥२१॥

व्यासेति भारतं महाभारतं वन्दे नौमि व्यासवचसामष्टादशपुराणशाखाभेदानां निर्य्यासं सारभूतं तेभ्योऽप्यधिकमित्यर्थः विश्वस्य संसारस्य सारमुत्कृष्टं यदङ्किता यन्नामाक्षरचिह्निता संज्ञां नामरूपां भारती सरस्वती वहति धारयति, भूषणतयैवालङ्करणतयैव, तथाच सरस्वत्या नामानि अन्यानि स्वाभाविकानि भारतघटितं भारतीति नामालङ्करणार्थं व्यासेनैव भारतनिर्माणेन निर्मूपासर-स्वतीभूषितोऽतो व्यासस्तुतिः ॥२१॥

सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यैः ॥
रोहति कुल्या गङ्गापूरे किं बहुरसे वहति ॥२२॥

सतीति रामायणेऽपि सति अन्यैः काव्यैः किं न किमपीत्यर्थः सकलकाव्य प्रयोजनं रामायणेनैव भवतीतिभावः किंभूते काकुत्स्थकुलोन्नतिकारिणि, ककुदि तिष्ठतीतिककुत्स्थः राजविशेषः तत्संभूतं कुलं काकुत्स्थं तदुन्नतिं तत्कीर्तिवर्द्धनं करोतीति तत्कारि तस्मिन्नित्यर्थः अर्थान्तरं न्यस्यति गङ्गाप्रवाहे बहुजले वहति सति कुल्या अल्पा कृत्रिमा सरित् किं रोहति किं कार्य्यकरण-समर्था भवति काका नेति भावः तथाच यथा सरितां गङ्गा तथा काव्यगणे रामायणमिति तत्कर्त्ता वाल्मीकिः सर्वाधिक इति ध्वनिः भारतप्रशंसोत्तरं रामायणप्रशंसाकथनेन ग्रन्थद्वारेणापि व्यासापेक्षया वाल्मीकेराधिक्यमिति वा ॥२२॥

अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त ॥
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥२३॥

बृहत्कथायाः लक्षसङ्ख्यकश्लोकरूपायाः कर्त्तारं गुणाढ्यनामानं कविं स्तौति अतीति व्यासेन यशः स्वकीयं यशः अपहारितं चोरितं हन्त खेदे अत्र हेतुः अतिदी-र्घ जीविदोषात् जीवनं जीव तद्वत्वदोषादित्यर्थः. यथा

प्रतिदीर्घजीवि, शीलमस्येति व्युत्पत्तिः, तथाच चिरजीवी चासौ गोपश्चेति कर्मधारयः तेन चिरजीवित्वात्मकाद्गोपादित्यर्थः यशोगहारं हेनुमाह वैः शुणियाणे गुणाढ्यः बृहत्कथाकर्त्ता कविः स एव व्यासः जन्मान्तरागतः नाखेन अपितु सर्वैरेवानुभूयेत यदि व्यासो गुणाढ्यकाले न जीवेत् जीवने तु गुणाढ्यत्वं न लभ्यं तर्हि का प्रसिद्धेति गुणाढ्यस्तुतौ तात्पर्य्यम् ॥३३॥

श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः ॥
त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥३४॥

श्रीरामायणेति रामायणभारतबृहत्कथानां कवीन् वाल्मीकिव्यासगुणाढ्यान् नमस्कुर्मः एत एव महाकवयः सर्वाधिकत्वेन परस्परं समाना नमस्याः श्रीशब्दस्य रामायणभारत बृहत्कथासु सम्बन्धात्तथा लाभ इति भावः समान-त्वमाह यैर्वाल्मीकिव्यासगुणाढ्यैः सरस्वती वाणी नदीच भिन्ना भिन्नप्रकारा सरसा शृङ्गारादिरससहिता सजलाच त्रिस्रोता इव गङ्गेव स्फुरति प्रतिभाति यथा वस्तुत एकैव गङ्गा लोकभेदेन मन्दाकिनी भागीरथी भोगवतीति प्रतीयते एवमेकैव सरस्वती कवित्रयभेदेन भिन्नेति प्रतीयतेऽतोवाल्मीकिव्यासगुणाढ्यास्त्रय एव समाना इति तानेव नमस्कुर्म इति श्लोकार्थः । यद्वा अभ्यर्हितस्य रामायणस्य पूर्वनिपातेन श्रीशब्दयोगेनच वाल्मीकेस्सर्वाधिकत्वं द्योत्यते, अतएव प्रथमं तस्य नतिः पूर्वमत्रापीति रहस्यम् ॥३४॥

साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ॥
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥३५॥

साकूतेति रतलीला सुरतक्रीडा कालिदासोक्तिः कालिदासकविवाक्य रतलीलाकालिदासोक्ती शिक्षासमयेपि प्रथमकरणश्रवणसमयेपि मुदे हर्षाय भवत इत्यर्थः अपितु सर्वस्य गुणस्य शिक्षासमये दुःखजनकत्वेन हर्षाजनकत्वं रतलीलाकालिदासोक्त्योरेनमपि हर्षजनकत्वमिति विरोधो बोध्यते कथंभूते साकूतं साभिप्रायं मधुरं रसोत्कर्षसहितं कोमलं मृद्वक्षरं यत् विलासिनीनां कण्ठकूजितं पारावतादिशब्दितं तत्प्राये, तद्बहुले इत्यर्थः समासः, रतिलीलायां विलासिनीकृतं कालिदासकाव्ये शब्देन बोधितमिति भेदः ॥३५॥

भवभूतेः संबन्धाद्भूधरभूरेव भारती भाति ॥
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ३६

भवभूतवि‍ति भूधरभृग्व शैलकन्येव भारती सरस्वती नान्येत्यर्थं पार्वती सरस्वतीचैकैव न भिन्नेति भावः भाति समप्रतिभाति हेतुमाह, भवभूतेः संबन्धात् इति भवस्य संसारस्य भूतिरुत्पत्तिः यस्मादिति भवभूतिः शिवः गिरिजायाः कुचौ वन्दे भवभूतिसितानना वित्यादिश्लोककरणात् भवभूतीति-लब्धनामा प्रभाकरश्च तत्संबन्धात् एतेन शिवप्रभाकरयोरेकपदोपात्तत्वेनाभेदप्रतिपादने सति एकनारीशरीरशालिनोः पत्न्योरप्यभेदो युज्यत एवेति दर्शितम् अतएव भवभूतिनाम्नः कवेः पाणिग्रहणसंबन्धः सरस्वत्यां नास्तीति शङ्का निरस्ता पार्वतीभारत्योः कवेः शिवप्रभाकरयोरर्थतोऽभेदकथनेन तदुपपत्तेः भेदे दोषमाह एतदित्यादि भवभूतिकृतकारुण्ये करुणरसप्रयुक्तकाव्ये ग्रावापाषाणः पर्वतोवा अन्यथा संबन्धाभावे पार्वतीभारत्योः शिवप्रभाकरयोः भेदे इत्यर्थः किं किमर्थं रोदिति रोदनं करोति अभेदेतु जामातृकारुण्ये श्वशुरस्य करुणा भवत्येवेति लोकसिद्धं ग्रावरोदनन्तु अपिग्रावारोदित्यपिदलतिवज्रस्यहृदयमित्यादिभवभूति-कृतश्लोके उत्तरचरिते करुणप्रकरणे प्रसिद्धम् भवभूतिकृतकारुण्ये पर्वता अपि रुदन्तीति प्रसिद्धिश्च यद्वा एवकार इवार्थे भारती भूधरभृदिव पार्वतीव भाति शोभते इति भवभूतेः सम्बन्धादिति साधारणधर्म्मोपादानं पूर्ववत् असादृश्ये दोषमाह एतदित्यादि अन्यथाऽसादृश्ये एतया प्रभाकरभारत्या कृतकारुण्ये कृतायां करुणायां ग्रावेत्यादिपूर्ववत् तथाच करुणरसकाव्यं सरस्वती करुणां विना न भवति अतः प्रभाकरसरस्वत्याश्च करुणा भवतीति दृष्ट्वा पर्वतरोदन-किमर्थमता आयते पार्वतीसदृशी प्रभाकरसरस्वती तस्याः करुणायां पुत्रिकारोदन भ्रमेण पितुः पर्वतस्य रोदनमित्याकलयामइत्यास्तां विस्तरः ग्रावागौशैलपाषाणा वित्यमरः ॥३६॥

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ॥
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥३७॥

जातेति वाणी सरस्वती बाणनामा कविः बभूवेति तथावगच्छामि तथा जानामीत्यर्थः बाणस्यसरस्वतीरूपत्वमित्याहुः, कर्त्तुमधिकत्वं प्राप्तुं यदिस्त्रिया कर्त्तुमशक्यं तत्प्रौढ़त्वमनेकवादिजयादिरूपमाप्तुं प्राप्तुं तथा कथं यथा शिखण्डिनी द्रुपदपुत्री भीष्मवधार्थं स्थूणाकर्णयक्षःशरीरमादाय शिखण्डीनाम पुमानभवत् तथाचातिप्रगल्भः सरस्वतीरूप एव बाणो नान्य इति स्तुतिः ॥३७॥

यं गणयन्ति गुरोरनु यस्यास्ते धर्मकर्म सञ्चितम् ।

कविमदमुशनसमिव तं तातं नीलाम्बरं वन्दे ॥३८॥

यमिति नीलाम्बरं नीलाम्बरनामानं तातं जनकं वन्दे अहमित्यन्वयः कविं पण्डितमुशनसःसादृश्येनैव काव्यसामर्थ्यलाभात् सङ्ख्यावान् पण्डितः कविरिति कोषाच्च कविवरमिति पाठे पण्डितश्रेष्ठमित्यर्थः तं कं गुरोरनु गणयन्ति मीमांसकाः प्रभाकरसदृशं गणयन्ति, अनुकरोति इत्यत्रानुशब्दस्य सदृशवाचकत्वादित्यर्थः । यस्यास्तेमरणे धर्मकर्म श्रौतस्मार्त्तकर्मकाण्डम् सङ्कुचितं तत्सदृशकर्मकाण्डतत्वज्ञाभावादितिभावः कमिव उशनसमिव शुक्रमिव कविं कविनामानमुशना भार्गवः कविरित्यमरात् यं शुक्रं गुरोरनु बृहस्पतेः पश्चात् लोकाः दिवसगणनार्थं गणयन्ति यस्यशुक्रस्यास्ते अस्तकालेधर्म्मकर्म्म-शुक्रास्तकालाविहितं कर्म सङ्कुचितं निषिद्धमित्यर्थः ॥३८॥

सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ॥
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥३९॥

सकलेत्यं राजानं स्तौति सकलेति, प्रबन्धस्य ग्रन्थस्य सकलकलाः चतुःषष्टि-कलाः कल्पयितुं ग्रन्थेनिबन्धुं कर्त्तुञ्च कुमुदबन्धोः चन्द्रस्य सकलकलाः कल्पयितुं प्रकाशयितुं प्रभु स्समर्थः सेनकुलतिलकभूपतिः सेननाम्ना स्ववंशोऽवादिराजः तत्कुलतिलकः तत्कुलसम्भूतसकलराजश्रेष्ठः सेतुनामकग्रन्थकर्त्ता कविमैव्यः प्रवरसेननाम्ना नरवरः स्ववंशीयो भूपतिरित्यर्थः राकाप्रदोषः पूर्णिमासन्ध्याकाल एकः केवलः मुख्यो वा तथाच पूर्णचन्द्रसदृशचतुःषष्टिकलाचतुरग्रन्थकरणसमर्थ-महाराजाधिराजप्रवरसेनदण्डितस्य मम ग्रन्थस्यच गौरवमितिध्वनिः ॥३९॥

काव्यस्याक्षरमैत्रीभाजो नच कर्कशा नच ग्राम्याः ॥
शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ॥४०॥

काव्येति काव्यस्य शब्दार्थयुगलस्यार्थबोधाय शब्दपक्षेऽर्थबोधजननाय पुरुष पक्षेऽर्थबोधनस्वाय शब्दा अपि पुरुषा अपि अर्थभेदात्तमुख्येऽपिद्वयम् प्रभवन्तीति शेषः साधव एव व्याकरणनिष्पन्ना एव साधुत्वज्ञानं विना न बोध इत्याशयः पक्षे काव्यनिपुणानकुशयः अक्षराणां वर्णानां या मैत्री यद्वर्णमादा-योत्थानं समानमेव विश्रामरूपा अक्षरमादायैववार्तां भजन्ति ते शब्दास्तथा काव्यविशेषणत्वेऽव्ययमेवार्थः पुरुषपक्षे न क्षरति नश्यतीति व्युत्पत्त्या अक्षरा

या मैत्री मित्रतानां भजन्ति ये ते तया अक्षरेणाक्षरस

पूर्ववत् इनिकश्चित् नच्च कर्कशाः रसापकर्षका यथा शृङ्गाररसे टवर्गादयः वीररसे तद्भिन्नाः शब्दाः यद्वा कर्कशादुर्य्योऽयास्तद्भिन्नाः पक्षे कर्कशाः क्रूरमतयः व्याकरणमीमांसाविचारकारकाश्चान्धाः चपेटाकटिशब्दादयः तेषां बोधकत्वेऽपि अवैदग्ध्यसूचकत्वेन रसापकर्षकत्वात् पक्षे ग्रामगामिनः नगरपत्तनादर्शिनइत्यर्थः, तथाच वैदग्ध्यरहिता इतिभावः कर्कशग्राम्यादीनामबोधेऽपि सहृदयनागरिककाव्यनिपुणवृद्धीनां मत्काव्यबोधो भविष्यत्येव तानेवोद्दिश्य कृतत्वादिति ध्वनिः ॥४०॥

## वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि ॥
## रसमपि तु न प्रतीच्छति बहुदोषः सन्निपातीव ॥४१॥

वंश इति सतां सहृदयानां प्राचीनरसबोधे प्रतिरोधिदोषरहितानां मनसि हृदये रसभाविते द्रवीभूतशृङ्गारादिरसपूरिते दोषः काव्यरसप्रत्यक्षप्रतिरोधिदोषः न विशति रसपूरितत्वेन स्थानाभावादिति भावः क इव वंशे वेणौ घुण इव कीटविशेष इव वंशे रसेन तैलेन भाविते वारं वारं प्रथमं लेपिते पश्चात् घुणो न विशतीत्यर्थः, तर्हि सर्वे कुतो न मनांसि रसेन भावयन्तीत्यत आह रसमपि पातुं नेच्छति बहुदोष इति बहुदोषः प्रथमसञ्जातावैदग्ध्यादिबहुदोषः रसं शृङ्गारादि पातुं सम्यगनुभवितुमिच्छत्यपि न किं वक्तव्यमनुभवतीत्यर्थः क इव सन्निपाती युगपत्प्रकुपितकफवातपित्तः पुमानिवं बहुदोषः मूर्च्छाशीतदाहप्रलापादिमान् रसमपि मृगाङ्कादिकमपि पातुं नेच्छतीत्यर्थः तथाच रसिकानां मम ग्रन्थे दोषस्फुरणमेव [illegible]दोषाणां सरसे मम ग्रन्थे प्रवृत्त्यभावेपि मम हानिर्नेति ध्वनिः ॥४१॥

## विगुणोऽपिकाव्यबन्धः साधूनामाननगतः स्वदते ॥
## फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥४२॥

विगुणोऽपीति काव्यबन्धः काव्यप्रबन्धः रचनामात्रं वा विगुणोऽपि, ओजः-प्रसादादिगुणरहितोऽपीत्यर्थः साधूनां सहृदयानामाननं गतः मुखोच्चारितः स्वदते उत्तमकाव्यवत् सुखसम्पादको भवतीत्यर्थः सामान्यकाव्यस्योत्तमकाव्यवत्सुखजनकत्वं दृष्टान्तयति, फूत्कारोऽपि गुणसामान्यरहितशब्दोऽपि सुवंशै-

, वंशादिना श्रुतिं श्रवण हरति

तथाच मम काव्यस्य त्रिगुणत्वेऽपि साधुरयिह सगुणत्वमेव सानुमानाद्विव्यतीति कविविशसिः ॥४२॥

स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् ॥
तितउरतुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥४३॥

स्वयमिति तितउः चालनी पिशुनः खलः स्वयमपि भूरिच्छिद्रः प्रचुररन्ध्रः पृथुकलङ्कश्च सर्वतोमुखं सर्वदिक्सञ्चारि सर्वांश्यसञ्च चापलं सकलाकम्पनं चाञ्चल्यञ्च तन्वन् विस्तारयन् तुषस्य धूर्णं स्मरयन्नं पतितयज्ञ तुषस्य दोषस्य गुणं सारं विहाय परापवादमात्रस्य विवेचने पृथक् करणे विविच्यकथने चाधिकृतः तदेकाधिकारः कृतः तथाच दोषमात्रस्य ग्राहिणां मम मौर्नेनिच्छन्यते, ततोनैंडः सन्वकवेत्यनेन डउपन्यये सताम् उच्चारणसाम्यादकारोकारयोर्गुणो न भवतीति चालनी तितउः पुमान् इत्यमरः ॥४३॥

अन्तर्गूढानर्थानव्यञ्जयतः प्रसादरहितस्य ॥
सन्दर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम् ॥४४॥

अन्तरिति सन्दर्भस्य ग्रन्थस्य नदस्य शोणादेश्च रसः शृङ्गारादिरसः जलञ्च रसज्ञानां शृङ्गारादिरसतत्त्वज्ञानां सम्यक्तत्त्वविजलविचिन्तीञ्च प्रीत्यै स्वादनसुखाय न भवतीत्यर्थः किं भूतस्य अन्तर्गूढान् अर्थान् अव्यञ्जयतः व्यञ्जनावृत्त्याऽबोधयतः पक्षे अन्तर्निलीनान् अर्थान् शैवालकीटादीन् अदर्शयतः प्रसादरहितस्य सुबोधत्वरूपकाव्यमुख्यगुणरहितस्य पक्षे प्रसादो नैर्मल्यं तद्रहितस्येत्यर्थः ॥४४॥

यदसेवनीयमसतामसृतप्रायं सुवर्णविन्यासम् ॥
सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः ॥४५॥

यदिति तत् काव्यं त्रिविष्टपंस्वर्गलोकं वा समुच्चये समं सदृशं विद्मः जानीमः तथाच यथा स्वर्गलोकवासिनां सुखं तथैव काव्यकारकलक्षणानां मर्त्येऽपि स्वर्गसुखं काव्यकरणजन्यपुण्यं चातो देवाः सुखभागिन एव कवयः सुखभुग्योभयत्राविशेषेऽ देवाधिका इति व्यज्यते,यत् काव्यं त्रिविष्टपञ्च असतां पापिनामविदग्धानाञ्च असेवनीयं सेवाया अयोग्यं निष्फलत्वात् पक्षे गन्तुमशक्यत्वात् असृतप्रायमसृततुल्यञ्च पक्षेऽसृतबहुलं सुवर्णविन्यासं सुवर्णानां समीचीनालङ्कारादिवर्णानां पक्षे सुवर्णानां हेम्नां सुन्दरूपाणां विन्यासो रचनं पक्षे सन्न्यासो यस्मिन् तदित्यर्थं

सुरसार्थैर्नरैं समीचीना रम्या अशोध्य तत्पक्षे सुराणा देवाना सार्थः समूहस्तम्भवमित्यर्थः ॥४५॥

सत्कविरसनाशूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥४६॥

सत्कवीति स्पष्टीकरणम् कवेः एवञ्च काव्यसामान्यं न तथेति ध्वन्यते रसना रसलाधाकर्त्री जिह्वा सैव शूर्पी स्वल्पशूर्पं प्रस्फोटनं शूर्पमस्त्रीत्यमरः तया निस्तुषतरः निर्मुक्तः शब्दशालिः शब्दधान्यं तस्य पाकेन पाचितेन तेनेत्यर्थः तृप्तः मांसल इव तृप्तो जनः दयिताधरं प्रेयस्या अधरमपि नाद्रियते नादरविषयं करोति यदा प्रेयस्याधरमपि नाद्रियते तदा लोकप्रसिद्धमपि नाद्रियते इति सुधा पीयूषरूपा का तेषामादरविषयः कथं स्यादधरस्य दासी यतः अधरादत्यन्ताल्पगुणा तथाच काव्यरसस्य सत्काव्यरसेन यथा तृप्तिः न तथान्येन केनापि पदार्थान्तरे-णेति भावः ॥४६॥

अकलितशब्दालङ्कृतिरनुज्ज्वला स्खलितपदनिवेशापि ॥
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा ॥४७॥

अकलितेति सूक्तिः यस्याः श्रवणेन सुखविशेषो भवति ईदृशी कविवाक् इत्यर्थः अनयोक्तिविशेषः काव्यं भिति, मञ्जरीकृता निरुक्तमेव काव्यसामान्यलक्षण-मनुमतं ग्रन्थान्तरे तु काव्यविशेषस्येति न विरोधः अतएव स्खलितपदत्वेऽपि न काव्यत्वहानिरिति हृदयम् अभिसारिकेव कृष्णाभिसारिकेव रमयति श्रोतारं नायकञ्च सुखयतीत्यर्थः सोत्कर्षशृङ्गारा शृङ्गाररसप्रत्यक्षोपयोगिसकलपदार्थसहितशृङ्गाररसप्रतिपादिका पक्षे उत्कर्षः निरुपधिदृढस्नेहः तत्सहितः शृङ्गाररसो यस्याः सेत्यर्थः किंभूता सूक्तिः अभिसारिका च अकलिता अवर्त्तमानाः शब्दालङ्कारा अनुप्रासयमकादयो यस्यां सा पक्षे अकलिता अज्ञाताः शब्दाः यासां नूपुरादयः अलङ्कारा भूषणानि यस्याः सा श्रवणयोः शब्दायमाना-लङ्कारशून्येति भावः अपिः सर्वत्र सम्बध्यते, तेन रमणसामग्र्यभावेऽपि रमयतीति विरोधः [illegible] नाम काव्यगुणास्तद्रहितापि पक्षे औज्ज्वल्यं [illegible] स्खलितपदनिवेशापि स्खलितः [illegible] निवेशो ग्रन्थनं यस्यां सा पक्षे [illegible] चरणाना निवेश प्रचारो

यस्या सा तथा च यथा सङ्गाराधिष्ठिता सभा एकद्वित्रिपार्षद हितापि शोभते एवमेव रसराजेन सोत्कर्षशृङ्गारेणाधिष्ठितं काव्य शब्दालङ्कारशून्य ... स्खलितपदनिवेशमपि शोभते विदग्धंरञ्जयतीति समुदायार्थः अाख्रस्तु अकलितशब्दालङ्कृतिरपि शब्दालङ्कारशून्यापीत्यर्थः अनेनार्थालङ्कारस्यावश्यापेक्षणीयत्व काव्ये सत्वमावेदितमभिसारिकापक्षे पूर्ववत् अनुज्ज्वलेति विशेषणमनुसन्धन् अभिसारिकापक्षे शुक्लवस्तुभूषादिमती शुक्लाभिसारिका अस्खलितानि व्याकरणसिद्धानि यानि पदानि धातुप्रातिपदिकानि तेषां निवेशो योजनं यस्यां सेत्यर्थः पक्षे त्वरा लोकदर्शनात् स्खलितपदनिवेशेत्यर्थः सूक्तिः काव्यं वाग्विदग्धा च यद्वा काव्यपक्षे स्खलितः भग्निनिभग्नः पदनिवेशः पदसमासो यस्यामल्पसमासेत्यर्थः सोत्कर्षशृङ्गारेतिपूर्ववत् तथा च सत्काव्ये शब्दालङ्कारदीर्घसमासादिविरहेऽपि सोत्कर्षशृङ्गाररसराजशालित्वेन विदग्धमनो रञ्जनस्य सार्व्वत्रिकत्वात् ॥४७॥

**अध्वनि पदग्रहपरं मदयति हृदयं नवा नवा श्रवणम् ॥**
**काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥४८॥**

अध्वनीति अध्वनि व्यङ्ग्यशून्यं ननूत्तमभिन्नम् उत्तमभिन्नस्यापि गुणीभूतव्यङ्ग्यस्य सहृदयहृदयाह्लादजनकत्वेन काव्यत्वात् मञ्जीरपक्षे शिञ्जितशून्यं पदग्रहपरं सुललितपदग्रहणमात्रतात्पर्य्यकमनुप्रासानुरोधेनाधिकपदं वा पक्षेऽत्यन्तसङ्कुलतयाचरणलग्नं हृदयंमदयति नवा हृदयं सहर्षं न करोती त्यर्थः पक्षे समदनं न करोती त्यर्थः नवा श्रवणं मदयतीतिसमानमेतादृशं काव्यमभिज्ञसभायां विदग्धसमाजे एतादृशं मञ्जीरं नूपुरं केलिवेलायां सुरत समये नवेतिद्वयं देशकालभेदेन प्रयोजनभेदवाक्यभेदसूचनार्थं तथाहिकाव्य प्रयोजनमभिज्ञहृदय श्रवणसुखं मञ्जीर प्रयोजनंसुरतकामोद्दीपनं श्रवणसुखञ्च तत्प्रयोजनरहितमिदं द्वयमपि निष्फलमेवेति भावः मञ्जीरो नूपुरोऽस्त्रियामित्यमरकोषेऽस्त्रियामिति मञ्जीरेष्यन्वेतीति मञ्जीरमपि साधु ॥४८॥

९ ... सूक्तयो मधुराः ॥

विधसुखजनकानां दयिताधरपानानां तत्त्वपरिज्ञाने तेन सकलनायिकावर्णन सामर्थ्यं सूचितं, सूक्तयः काव्यानि, मधुराः देवताप्रसादशालिकविकाव्यतोऽधिका भवन्तीत्यर्थः । दृष्टान्तमाह अकलितरसालमुकुलः अकलितः अभुक्तः रसालस्याम्रस्य मुकुलः कोरकः मुकुलपदेन बाल्यमारभ्यास्वादनमुच्यते अदलितेतिपाठेप्ययमेवार्थः कोकिलः कलं पञ्चमस्वरविशेषं नोदीरयति उच्चारयतीत्यर्थः, अथवा आस्वादितौ दयिताधरसुधारसौ येन तस्येत्यर्थः तथाच प्रथमं मनुष्यदेहेन दयिताधरपानं कृत्वा देवदेहेनामृतरसपानं करोति ततः दयिताधररसमुधारसयो रधिकं किञ्चिन्निर्गतव्यमित्याशयेन मर्त्यमण्डलमागत्य महाकवयो ब्रह्मानन्दतुल्यानन्दजनकोत्तमकाव्यं कुर्वन्तीति कवयः काव्यञ्च सर्वाधिक मितिध्वनिः॥४६॥

## बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् ॥
## कविमाणवकाः दूतीव्याख्यातमधीयते भावम् ॥५०॥

बालेति कविमाणवकाः कवयः माणवका बटवः शिष्या इति यावत् अध्ययन कर्तृत्वात् भावं गूढमर्थम् अधीयते तदध्ययनं कुर्वन्तीत्यर्थः किंभूतं भावं दूतीव्याख्यातं सञ्चारिणीविवृतं कस्य ग्रन्थस्य भावमित्याह असत्या चपलाया नेत्रत्रिभागेन कामशास्त्रोक्तनानाप्रभेदभिन्ननेत्रविकारेण कृतं भाष्यं सूत्रार्थस्यातिसूक्ष्मस्य परिभाषणं किञ्चिद्विविच्य कथनं यस्य तमित्यर्थः कुत्रत्यं भाष्यमित्याह बालयोः मुग्धयोः स्वकीयायाः परकीयाया वेत्यध्याहर्तव्यम् कटाक्षेणार्धकटाक्षशालिनानेत्रेण सूत्रितं सूचितं तदुक्तं सूचनात् सूत्रमित्युक्तमिति तथाच कामिनीचेष्टितं दूतीं विना न ज्ञायत इति दूतीपरिचयोऽवश्यं विधातव्यो यदुक्तं रति दूतीरहिता इत्यादि सबलः पन्थाः सर्वस्य, यद्वा दूतीव्याख्यातमेवाध्यायते निरुक्तं भावं तेतावन्मात्रमेव जानन्ति नाधिकम् अतएव ते कविमाणवकाः कविबालाः अपरमा इत्यर्थः तथाच बालानेत्रसूचितमसतीनेत्रत्रिभागकृतभाष्यं दूतीव्याख्यातमखिलं कान्तः ताभिः सूचितान् सर्वान् शृङ्गारोपयुक्तान् जानन्ति त एव शृङ्गाररसाभिज्ञाः कवयः अन्ये शृङ्गाररसज्ञानरहिता एव कवयः, अतएवोक्तम् अपरेण शृङ्गारोत्तरसत्प्रमेयरचनेत्यादि यद्वा ये कवयः भावमधीयते लब्धवर्णसत्रिवाक्षिताः ते कविमाणवकाः देवताप्रसादादिना प्रथमं कवयो भूत्वा पश्चान्माणवकाः परमप्रयासेनगुरूक्तमात्रग्राहका इत्यर्थश्छिन्नमस्तौ वृक्ष इत्यादौ तथा दर्शनात् तथाच तेषामचिरमधीतवान्नकाव्यचारुता नवा प्रतिष्ठापि भवती

त्ति यौवनारम्भेबालासतीदूतीभ्योऽधीत्य देवताप्रसादशास्त्रादिज्ञानं सम्पाद सम्प्रति बालासतीदूतीनामप्यध्यापकाः कवयो मादृशाएव अत्र तत्काव्य धार्विंतियद्वा कवीनां माणवकाः शिष्याः दूतीत्याख्यातं भावमधीयत एव तथाच कविभ्योऽधीत्यापि दूतीतोऽध्ययनं रसराजपरिज्ञानाय भवतीति दूतीजनः कर्त्तव्य इत्युपदेशः ॥५०॥

मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः ॥
मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः ॥५१॥

मसृणेति गोवर्धनस्य गोवर्धननाम्नः पक्षे गवां वर्द्धनस्य आर्य्याः छन्दो विशेषरूपाः श्रेष्ठाभिसारिकाश्च जयन्तीतिशेषः किंभूताः मसृणानि स्निग्धानि मधुराणि कोमलानीति यावत् यानि पदानि विभक्त्यन्तानितेषां रीतयो वैदर्भ्यादि यस्तासां गतिर्ज्ञानं यासु ता इत्यर्थः अभिसारिकापक्षे मसृणानां कोमलानां रीत्यागजहंसादिरीत्या गमनं यासां ता इत्यर्थः यद्वा मसृणा शोभना पदरीतिः पादविन्यासप्रकारो यत्र तादृशी गतिर्गमनं यासां ता इत्यर्थः सज्जनानां काव्य परिपक्वबुद्धीनां हृदयानि मनांसि अभिसारयन्ति द्रावयन्ति वशी कुर्वन्तीत्यर्थः पक्षे सज्जनानां विदग्धानां हृदयानि अभिसारयन्तीत्यर्थः सुरसाः नवरसबोधिकाः पक्षे शृङ्गारिण्यः मदनेन ह्यमद्वैतमानन्दविशेषः कारणेन कार्यलक्षणात् तस्यो पनिषदः अन्यानर्थानपहाय मदनाद्वैतानन्दमात्रबोधिका इत्यर्थः अन्या अपि उपनिषदः ब्रह्मानन्दमेव प्रतिपादयन्ति अन्यार्थान् विहाय यथेति समुदितार्थः पक्षे मदनेन मनोजेन कारेण यदद्वैतं स्त्रीपुंसयोरभेदानन्दैक्यम् तदुपनिषदः शिरोलङ्करणरूपा इत्यर्थः गोवर्धनशब्दभेदेन व्यङ्ग्यानां भेदो विस्तरभिया न दर्शितः ॥५१॥

वाणीप्राकृतसमुचितरसाबलेनैवसंस्कृतिं नीता ॥
निम्नानुरूपनीरा कलिन्दकन्येव गगनतलम् ॥५२॥

वाणीति वाणी सरस्वती प्राकृतानां भाषाविशेषरूपाणां समुचितः योग्यो रसो यस्याः सेत्यर्थः शालिवाहनेन गाथासप्तशती कृता सैव तथेतिभाव- श्चक्षुः कलिकालदोषेण प्राकृतः पामरः कुलशीलादिहीनः तद्योग्यमित्यर्थः तदुक्तं कुलशीलक्षणहीने च कुलहीने सरस्वती कुपात्रे रमते रामा मेघो वर्षति पर्वते इत्यादि बलेनैव बलात्कारेणैव पक्षे बलभद्रेणैवेत्यर्थः संस्कृतिं साधुपदत्वं

सकलशास्त्राभिज्ञग्रहणयोग्यतामितियावत् नीता प्रापिता दृष्टान्तयति निम्नस्य गम्भीरस्य, अनुरूपं योग्यं नीरंयस्या सा कलिन्दगिरिकन्या यमुना गगनतल माकाशं बलभद्रेण यथा नीता तथेत्यर्थः तथाच निन्दितमर्त्यस्थलस्वर्गयोर्यावान् भेदस्ता वानेवप्राकृतसंस्कृतयोरितिममापि बलभद्रतुल्यता ॥५२॥

आर्य्यासप्तशतीयं प्रगल्भमनसामनादृता येषाम् ॥
दूतीरहिता इव ते न कामिनी मनसि निविशन्ते ॥५३॥

आर्येति इयं गोवर्धनकृता नत्वन्यकृतेतिभावः येषांप्रगल्भं साभिमानं सत शन्यानयः किमधिकं श्रेयमिति सावहेलमिति यावत् एतादृशं मनोयेषां तादृशाम् अनादृतार्यासप्तशतीयमित्यन्वयः अवहेलितेत्यर्थः ते अनादरकर्त्तारः कामिनीनां सकलकामकलाचतुराणां मनसि हृदये ननिविशन्ते न निविष्टाभव न्तीत्यर्थः यथा दूतीरहिताः दूतीशून्याः नायकाः स्वयं सम्पादितनायिकास्नेहा अपि नायिकाहृदये स्थिरा न भवन्ति दूतीशालिनायकेनान्येन, प्रेमकरणात् दूती सत्त्वे कल्पितवार्त्तयापि तया प्रेमसंरक्षणात् एवमेवार्य्यासप्तशतीपरिज्ञानेन सकल कलापरिज्ञानेन दूत्यादि संरक्षणेन च नायिकाहृदयस्थैर्यंभवतीति श्लोकार्थः ॥५३

रतरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ॥
अरसालंकृतिरपि न रोचते शालभञ्जीव ॥५४॥

रतरीतीति वाकविता शुद्धापि अलङ्कारसामान्यशून्यापि मुदे हर्षाय यदि सरसा प्राचुर्य्येण रसप्रतिपादिनी तथाच रसवत्काव्यमित्येवकाव्यसामान्यलक्षणं नतु सालङ्कारत्वमपि विशेषणमित्यभिमानः केव प्रियेव किम्भूता रतरीतौ सुरतपरिपाट्यां वीतं नायकापहृतं वसनं परिधानीयं यस्याः सेत्यर्थः शुद्धापि सुरतभ्रष्टभूषणापि सरसा शृङ्गाररसे लोलुपा अरसा रसाद्वेधिका पक्षे शृङ्गार रस विमुखी सालंकृतिरपि अलङ्कारयुक्तापि पक्षे सकलभूषणसहितापि न रोचते अभिलषिता न भवतीत्यर्थः केव सालभञ्जीव दारुपुत्रीव तथाच सकलभूषण सहितापि अरसा काष्ठकृतस्त्रियस्त्रीप्रतिमा यथा न रुचिविषयः एवमेव रसशून्या वाक्नायिकाच न रोचते यतः रसालंकारयोर्मध्ये रसस्यैव प्राधान्यमतोऽलंकार शून्यमपि सरसंकाव्यमेव यद्वा वाक् शुद्धापि स्फुटालंकार शून्यापि तथाचास्फुटा लङ्कारसत्त्वेऽपिरसाधिक्यादविरोधः । अतएवरतरीतिवीतवसनेत्याद्विताप्रथमयत्न सम्बन्धेऽविरसोत्कर्षसमातव्रहितत्वं ज्ञाप्यते नतु सामान्यत इति शालभञ्जी

रपतिसन्देशेन भर्त्सयन्ती कन्यकामुपदिशति मातादृति मादृशां पन्थाः ॥२॥

अयि कूलनिचुलमूलच्छेदनदुःशीलवीचिवाचाले ॥
बकविघसपङ्कसारा न चिरात्कावेरि भवितासि ॥३॥

निजकुलजन द्वेषिणीं यौवनोन्मत्तां नवधनोन्मत्तां वा कश्चिदन्योक्त्या वक्ति अयीति, अयि इति संबोधने नायिकेऽइत्यर्थः कूले तटे ये निचुला इज्जलास्तेषां यन्मूलछेदनमामूलादुत्पाटनं तेन दुश्शीला दुःस्वभावा या वीचयः लहर्य्यस्ताभिः वाचाले बहुविधशब्दकारिणि अनेनानुचितकार्य्यकारित्वं कथ्यते कावेरि नचिरात् शीघ्रमेव भवितासि कीदृशी बकस्यातिनिन्द्य पक्षिविशेषस्यअन्नेनसारसराजहंसाद्यनुपयोगित्वं ध्वन्यते तेन नायिकाया अपि कुत्सित नायिकोपभोगो व्यज्यते विघसः भुक्तविशेषः पङ्कः कर्दमः सारः सारभूतो यस्या इत्यर्थः विगतः निवृत्तः घसः अदनं यस्मात्सविघसः भुक्तशेषइत्यर्थः अतएव नारदभोजनदानान्तरं बुभुजे विघसं धीमानिति हरिवंशे पारिजातहरणे अमृतं विघसे यज्ञशेषभोजनशेषयोरित्यमरः निचुलोम्बुजइज्जल इत्यपि तथाच यथा कावेरी नदी वर्षान्यसमये पङ्कमात्रावशेषा । चातुर्मास्ये जलाधिक्यदोषेण तटतरून् वृथानिपातयति एवमेव त्वमपि चञ्चलां यौवनधनसमृद्धिं प्राप्य कुलजनान् म्लानान् कुरुषे बहुविधपापञ्चेति ॥ ३ ॥

अयि विविधवचनरचने ददासि चन्द्रं करे समानीय ॥
व्यसनदिवसेषु दूति क्वपुनस्त्वं दर्शनीयासि ॥ ४ ॥

परपुरुषसङ्गमाय प्रेरयन्तीं दूतीम्प्रति सती नायका वदति अयीति, दूतिदोत्यवृत्त्यैव धनग्राहिणि ननु सखि अनेन मम क्षत्या क्षतिर्नेति व्यज्यते विविधातथ्येऽपिअतथ्या वचनस्य वाक्यस्य रचना घटना यस्या इत्यर्थः अनेन तव वचनरचनेऽपि धर्म्महानिरिति सूच्यते, चन्द्रं करे हस्ते समानीय ददासि न दातुं कथयसि, तथाच ब्रह्मणोऽपि अशक्यं वचसा साधयामीति लोकोक्तिः व्यसनदिवसेषु परपुरुषभोगजनितपापविपाककृतनरकदिवसेषु कुलपितृकुलजसकलविरोध दिवसेष्वितिवा त्वं क्व दर्शनीया दर्शनयोग्या अपितु नेत्यर्थः का वार्त्ता प्रकारकरणस्येतिभावः अतीव व्यसनदिवसेषु प्रेमभङ्गजनितदुःखदिवसेषु यौवनतापगमेषु वेत्यर्थः चन्द्रमस्याहूलादविषयं नायकं तथाच यदि व्यसनसमये तत्साम्य प्रतीकार स्यात् तदा स्वीकरोमि नान्यथेति तात्पर्येण दर्शनीया-

सीत्यन्तत्वाच्चरे नायिकयोक्ते अस्तुम्लानि दूत्युत्तरमिति युग्मक मिदमिति विदग्धसरणिः ॥ ४ ॥

अस्तुम्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः ॥
तदपि न मुञ्चति स त्वां वसुधाच्छायामिव सुधांशुः ॥५॥

पूर्वमभिव्यक्तया निर्विण्णतया निवृत्तां नायिकां पुनर्दूती प्रेरयति, अस्त्विति, म्लानिरस्तु रूपमालिन्यमस्तु, पक्षे म्लानिः मुखमालिन्यं सभायामस्त्वित्यर्थः गुरुजनस्य वा लोकः सर्वः लाञ्छनं कलङ्कमपदिशतु वदतु पक्षे लोकः खलः लांछनमपवादम् ओजस्तेजः हीयतां हीनं भवतु पक्षे सशङ्कित्वात् ओजः हृदयप्रकाशः तेजो वा यद्यपि एतत्सर्वं भवतु तथापि स नायकः त्वां न मुञ्चति वर्त्तमान सामीप्येत्यादिसूत्रबलान्नत्यक्ष्यतीत्यर्थः कामिव वसुधा छायां पृथ्वीप्रतिबिम्बं सुधांशुरमृतदीधितिरिवेत्यर्थः तथाचोत्तमनायकस्यायं स्वभावः यदङ्गीकृतेऽर्थे लक्षसङ्ख्यकदोषेऽपि न परित्यजति तमर्थं यथा पृथ्वी च्छायाकृतदोषलाञ्छितश्चन्द्रः दूरेऽपि च स पृथ्वीच्छायाग्राही पृथ्वीच्छायादान-कर्त्तेति त्वयापि तथैव कर्त्तव्यमिति भावः ॥ ५ ॥

अतिचापलं वितन्वन्नन्तर्निवसन्निकामकाठिन्यः ॥
मुखरयसि स्वयमेतां सद्वृत्तां शङ्कुरिव घण्टाम् ॥६॥

सर्व्वदैव भवत्यास्सखी मौखर्यं करोतीति वादिनं नायकं नायिकास-ख्याह अतीतिएतां मत्सखीं स्वयमेवात्मत्कथनं विनेत्यर्थः सद्वृत्तांसमीचीन-वृत्तान्तां पातिव्रत्यादिगुणयुक्तामित्यर्थः पक्षे सत् समीचीनं वृत्तं मण्डलं यस्यास्तामित्यर्थः त्वं मुखरयसि अनुचितवक्त्रीं करोषि पक्षे सशब्दां करोषि स्वयमित्यस्याप्यत्रान्वयः अतिचापलं दास्यादिपरिग्रहं वितन्वन् कुर्वन् नियम्य उद्योगसामान्यरहितः यद्वा अन्तः करणे मम सख्यां निवसन् पक्षे अन्तर्मध्ये निवसन्नन्तः अतिचापलं सर्वतोभ्रमणयोगं विभागञ्च विस्तारयन्नित्यर्थः निका-ममत्यर्थं काठिन्यं कटुभाषित्वं यस्य स इत्यर्थः पक्षे स्वाभाविककाठिन्ययुक्तः कठिनद्रव्यनिर्मितत्वात् कां क इव घंटां गरुडलाञ्छिततया सविशेषरूपां शङ्कुरिव लोहादिनिर्मितकीलविशेषइवेत्यर्थः तथाचमत्सखी सर्वोत्तमत्वा देकचित्ता त्वन्तु चपलोऽसीति शुद्धस्वभावत्वात्तया मौखर्य्यमात्रं क्रियते त्वयातु दुष्प्र क्रिये व क्रियते तस्या को दोष इति श्लोकार्थ ॥ ६ ॥

न पुनरनन्तर्गर्भितनिधिनि धरामण्डपेकेलिः ॥७॥

असमीचीनस्थले सुरतं याचमानं नायकं नायिकाह, अङ्गेष्विति खञ्जनयूनोः खञ्जरीट स्त्रीपुंसयोः पक्षिणोरपीत्यर्थः, अनेन खञ्जनपदेन सङ्कोचाल्पत्वमत्यल्पकालशक्तसुरतसम्पादनं सुरतस्थाननियमे प्रयोजनाभावश्च युवपदेनैकशेषसिद्धेन द्वयोरपि सर्वदा कामातुरत्वं समस्नेहवत्त्वञ्च व्यज्यते मनोभवस्य मनोमात्रभवस्य कामस्य मनोभवपदेन मनसः सर्वदा सत्वेनानवरतत्वं कामपूलरे प्रादुर्भावरूपे कथ्यते प्रशब्देन सर्वजनवेद्यत्वं व्यज्यते, अङ्गेषु सर्वाङ्गेषु जीर्य्यति जीर्णो भवति मनोभवप्रसरः खञ्जनयूनोरित्यन्वयः परं केवलमङ्गेष्विति बहुवचनेन सर्वाङ्गीणव्यापारस्य निष्फलत्वन्तेन चुम्बनालिङ्गनादिसकलभोगनिवृत्तिः जीर्य्यतीत्यनेन सूक्ष्मताबोधकेन क्षणं निलीय पुनस्तथैवाविर्भवतीति ध्वन्यते परमित्यनेन केचि जीर्णाः केचिन्न जीर्णाः इति व्यवच्छिद्यते धरामण्डपे सकलपृथ्वीमण्डलरूपे मण्डपे सत्यपि पक्षिणः सर्वत्र तुल्यत्वादिति भावः पुनर्न केलिः नैव सुरतंपुनःशब्दस्यावधारणवाचकत्वात् धरामण्डपपदेन सर्वदास्थलसौलभ्यं पुनः पदेन रत्यभावो व्यङ्गीकृतः नतु यथातथास्थाने रतिरिति केलिपदेन सुरतवाचकेन परिहासोऽपिनेति गम्यते कुतो न केलिरत्र हेतुगर्भविशेषणं धरामण्डपस्याह अनन्तर्गर्भितनिधिनि अन्तरभ्यन्तरे गर्भितः गर्भवन्निलीयस्थितः निधिः पद्मशङ्खादिर्य्यस्य मण्डपस्थलस्य तत् अन्तर्गर्भितनिधि न तत् अनन्तर्गर्भितनिधि नपुंसकं तस्मिन् अनन्तर्गर्भितनिधिनीत्यर्थः अन्तः पदेन दर्शनेच्छाभावः गर्भितपदेनान्यत्रस्थापितत्वं निधिपदेन पक्षिणउपयोगाभावश्च सूच्यते खञ्जरीटरतस्थाने निधिः शयनस्थाने काचः मलोत्सर्गस्थाने दग्धकाष्ठमवश्यन्तिष्ठतीतिप्रसिद्धम् एतदन्यत्र एतानि न करोतीतिच कामातुरयोर्यूनोर्बहुधा दुःखितयोः सर्वदा सुलभरतस्थानयोः संकोचसून्ययोरपि पक्षिणोर्नियमितस्थानं विना न भवति वयोः समीचीनवृत्तयो पर्य्यङ्कादिकं विना कथं रतमिति नायिका नायकं प्रत्यवददिति वाक्यार्थः यद्यपि मण्डपपदस्य जनाश्रयस्थलवाचकस्य कथं रतयोग्यत्वं तथापि गृहविशेषवाचकत्वमेवमण्डपपदस्य जनाश्रयत्वस्योपलक्षणत्वमतएव मण्डपं प्रविश पश्येत्यादौ न जनाश्रयत्वबोधः मण्डपोऽस्त्री जनाश्रय इत्यनेन नपुंसकत्वं मण्डपपदस्यातोऽनन्तर्गर्भितनिधि

त्वेन तथाच सगुणस्यैवोपासना न निर्गुणस्येति सिद्धम् एके –
इन्द्रियान्तरेण सर्वदा प्रकृतिपुरुषोपासनमालम्ब्य न केवला प्रकृतिः सेव्या
आर्य्येभिर्विशेषिणामितिस्मरणात् निर्विशेषणां पुरुषशून्यामिति तद्व्याख्या
तथाच प्रकृतिविशिष्टःपुरुषः पुरुषविशिष्टाप्रकृतिर्वोपास्येति सांख्यसिद्ध
पक्षेऽभिध्वान् कश्चित्पुरुषदिशति अन्धसमये नेत्रापाटवकाले-अन्धत्वमन्धत्वमेव
नतु बधिरत्वं बधिरकाले श्रोत्रापाटवसमये बधिरत्वमेव नत्वन्धत्वमित्यर्थः तथा
चैकेन्द्रियापाटवेऽपि इन्द्रियान्तरेण सर्वदाप्रकृतिपुरुषोपासनमालम्ब्य श्री केशव
योः प्रकृतिपुरुषयोः प्रेमपात्रं प्रजोत्पादकः प्रणयी प्रजापतिः इतिविशेषणाभ्यां
त्रिवर्गकथनं नाभिस्थितत्वेनसायुज्यभोक्तृत्वम् अनेन मोक्षकथनमिति—अथवा प्रजा
पतिः असङ्कल्पितकाम्यकर्त्ताऽनेनासंकल्पितकाम्यकर्त्ता ब्रह्मणा सह मुच्यत इति
श्रुतिचोदितमोक्षभागित्वं प्रणयीत्यनेन त्रिवर्गभागित्वं प्रणतस्यत त्वत्पादुकत्वात्
नाभिवास्तव्य इत्यनेन पद्मरूपनाभिस्थितिकथनेन पद्मासनोपवेशनेन साधनावस्था
कथितेति निरुक्तोपासनैव चतुर्वर्गदात्री नान्येति ध्वन्यते सर्वानन्दाय भक्ति
योगं स्तौतीत्येके ॥८॥

अयि कोषकार कुरुषे वनेचराणां पुरो गुणोद्गारम् ॥
यत्र विदार्य्य विचारितजठरस्त्वं स खलु ते लाभः ॥९॥

पामराग्रे प्रकाशितविद्यं तदनादरेण खिन्नं कञ्चन कश्चिदन्योक्त्याह अयीति
कोषकार कीटविशेष वनेचराणां भिल्लानां पुरो गुणोद्गारं सूत्रनिस्सारणं
कुरुषे तत्र स लाभस्तव निश्चयेनज्ञातएव लाभं विना वृथा खिद्यसे इतिभावः स
कः यत् विदार्य्य भागद्वयमुदरं कृत्वा अनेन पुनस्सन्धानानर्हत्वं ध्वन्यते विचा
रितजठरःकुतस्ते गुणा निस्सरन्ति इतिज्ञानायतव जठरविदारणं नकृतमिति सामा
न्यलाभश्च जानीहि तस्मात् पामराग्रे गुणप्रकाशेन लाभसमादरादेः का कथा-अन
र्थोऽत्र जात इत्येवदैवात्तव जातं तवैवदोषो न तेषामिति भावः ॥९॥

अगणितमहिमा लङ्घितगुरुरथस्नेहः स्तनन्धयविरोधी ॥
इन्द्राणीलिङ्गितस्यास्त्वयि रागः प्राणनिरपेक्षः ॥१०॥

नायिकासन्तानं दृष्ट्वा किञ्चिदुदासीनं नायकं दूती प्रोत्साहयति अगणि
तेति तस्याः यौवनारम्भमारभ्य त्वदेकचित्तायाः इत्यर्थः अनेन सर्वथा परित्य
ज्यानेति गम्यते त्वयि स्वच्छन्दप्रयोगेणानादरसूचकेन तव भाग्यं तस्यास्त्व

सत् तिमिरदोषदूषितं चक्षुर्यथा न लक्षयति तथा सारस्वतमपि चक्षुर्नलक्षयतीति व्याजा सारस्वतं सर्वं जानातीति स्तुतिः सतिमिरं सान्धकारमिवेत्यन्वयो वा असतीकटाक्षपातमात्रेण मदनुरक्तेय मितिभ्रान्तं प्रति सुहृदुपदेशोऽयमिति वयम् अर्थः प्रथमवत् ॥१२॥

**अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ॥**
**इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥१३॥**

विदग्धपरिषदि स्वैरकथामाह अन्येति अन्यमुखे प्रियेतरमुखे यः दुर्वादः दुष्टपरिवादः प्रियमुखे स एव दुर्वादः परिहासः केलिः तथाचैकएवदुर्वादः व्यक्तिभेदेन भिन्नकार्य्यकारी तथा यथा इतरेन्धनेन साधारणकाष्ठेन जन्म यस्य स एव धूमः अगुरु काष्ठसंभूतः धूप इत्युच्यते आश्रयभेदाद्भेद इति भावः प्रियकृतनिर्भर्त्सनेन खिन्नायिकां सख्याह इत्यपि कश्चित् सतीपतिकृतनिर्भर्त्सनश्रवणेनकृतोपहासामसतींसखींप्रतिसतीकृतसामान्याकारोक्त्या समाधानवाक्यमिदमिति सारम् ॥१३॥

**अयि सुभग कुतुकतरलाविचरन्तीसौरभानुसारेण ॥**
**त्वयि मोहाय वराकी पतिता मधुपीव विषकुसुमे ॥१४॥**

दुष्टं नायकं प्रति परकीयासखी आह अयीति सुभग भाग्यशालिन्अनेन भाग्यमात्रकथनेन वैदग्ध्याभाव इति सूच्यते, सुभगे सुन्दरे यत्कुतुकं कौतूहलं तेन चञ्चलेत्यर्थकमेकं पदं वा सौरभं ख्यातिस्तदनुसारेण तदाकृष्टेत्यर्थः सञ्चरन्ती त्वयि रूपख्यातिमात्रसारे मोहाय वैचित्याय वराकी अनधीना पतिता न स्वतन्त्रेति भावः विषकुसुमे विषवृक्षपुष्पे मधुपी भ्रमरी विनोदचञ्चला गन्धानुसारेण सञ्चरन्ती मरणाय यथा निपतति तथेयमपीत्यर्थः तथाच स्वच्छा स्वभावतरला मम सखी रूपख्यातिशालिनातिदुष्टेन त्वया वचनमात्रेण प्रतार्य्यते, तथा न बुध्यते तत्र मया किं करणीयमिति भावः ॥१४॥

**अयि मुग्धगन्धसिन्धुरशङ्कामात्रेणदन्तिनोदलिताः ॥**
**उपभुञ्जतेकरेणू.केवलमिहमत्कुणाःकरिणः ॥१५॥**

जातयौवनचिह्नान् पुरुषान् अन्तःपुरान्निवारयन्तं बालकाननिवारयन्तं महाराजं कञ्चन प्रभुमस्योचिता कश्चिदुपदिशति अयीति मत्तगन्धगजो यस्यगन्धमात्रेणान्यगजाः पलायन्तेस गन्धगजःअनेनातिप्रतापशालित्वं द्योत्यते दन्तिनः दन्तयुक्ता

गुणस्यैवं सामर्थ्यमन्तर्गतगुणस्य किम्प्रयोजनं परोपयोगाभावेन व्यर्थत्वमेवे-तिहस्तपदे स प्रसिद्धो गुणो गीतिरिवेत्यर्थः वनेचरमिति पाठे हरिणविशेषणं तथाच पशूनामपि चित्तहरणसामर्थ्यं गुणस्य किं वक्तव्यं विदग्धस्येति भावः ॥१७॥

अतुलितसकलविभूषां प्रातर्बालां विलोक्य मुदिताभिः ॥
प्रियशिरसि वीक्ष्य यावकमथ निःश्वसितं सपत्नीभिः ॥१८॥

सपत्नीसखीभणितं बालसखी प्रति अतुलितेति अतुलिताः अखण्डिताः सर्वा भूषा यस्यास्तां बालां विलोक्य प्रातरुषःकाले मुदिताभिः हर्षिताभिः अत्र बालापदेन सुरतालिङ्गनेऽपि भावदयवशाद्भूषणच्युतिः स्यादेवातः परिहास-मात्रव्यतिरेको गम्यते प्रातःपदेन प्रियानादरेण व्याकुलीभूय समागमनं द्योत्यते मुदिताभिरित्यनेन क्रीडास्या न जातेति नास्यां पतिः प्रीतः किन्तु असन्तुष्ट इति व्यज्यते अथानन्तरं यावकमलक्तकं बालापदे लग्नं प्रणामेनप्रिय-मस्तके निरीक्ष्य सपत्नीभिः समानपतिकाभिः निःश्वसितं निश्वासः कृत इत्यर्थः प्रियेण बालाप्रणतेऽपि, कृते बालया कोपवशान्नाङ्गीकृतं सुरतमिति भावः सर्वंकार्य्यं सहसा न कर्त्तव्यं करणे चोपहास एव भवति यथा सपत्न्या उपहासो जात एतदेवाविचार्य्य बन्धुरपि स्यादिति कश्चित्कश्चिदुपदि-शतीत्येके ॥१८॥

अयि लज्जावति निर्भरनिशीथरतिनिःसहाङ्गि सुखसुप्ते ॥
लोचनकोकनदच्छदमुन्मीलय सुप्रभातन्ते ॥१९॥

पतिगृहगमनसमये लज्जां नाटयन्तीं नायिकां प्रति सखी वदति अयीति लज्जावति विरोधलक्षणया लज्जाशून्ये इत्यर्थः निर्भरमत्यर्थं निशीथे रात्रिमध्यभागे रतं सुरतं तेन निःसहानि विकलानि अङ्गानि यस्यास्तत्संबोधने सुखेन परिपूर्णरतसुखेनसुप्ते लोचनकोकनदयोः नयनरक्तोत्पलयोः छदं पत्रमुन्मीलय प्रकाशय सुप्रभातं सुन्दरप्रभातमस्ति अस्त्यतिशेषः तथाच रात्रिश्च समीचीना एव यातैव किन्तु पर्य्याप्तानिवाहेति परिहासोक्तिरिति व्यज्यते ॥ १९ ॥

अमिलितवदनं पीडितवक्षोरुहमतिवृतजघनोरु ॥
शपथशतेन [illegible]मालिङ्गितोऽस्मि तया ॥२०॥

सर्वदा नायिकासंगमात्मपूर्वकं सखायं प्रति सखा अमिलितेति तत्र किञ्चित्परिशीलितम न चिरमित्यर्थं यह प्रेमकमालिङ्गित जस्मीत्यर्थं

केवलपदेनालिङ्गनोत्सवक्रीडादिव्यवच्छेदः भुजाभ्यां करास्यां शपथशतेन मम पूर्णैः शपितासि मामालिङ्गस्वेत्यादिवचनशतेन तिभावः आलिङ्गनस्याविशेषणान्याह अमिलि...संयोजितं वदनं मुखं यथा स्यात्तथेत्यर्थः चुम्बनादि...कज्जलादिव्यसनभ...निभावः न पीडितौ कुचौ यथा स्यात्कुङ्कुमादिच्युतिभियेति भावः अतिविदूरजघनमतिविदूरोरुद्वेत्यर्थः अतिविदूरत्वेन जघनोर्वादीनां सामीप्ये सुरतमवश्यं स्यात्तत्तेषामतिदूरस्थापनमितिभावः तथाच गुरुजनभीत्या चुम्बन सुरतादिकं न जातं मत्कृ्मशपथकथार्थं स्वयमालिङ्गनमात्रं कृतं तयाऽतोऽस्याः न दोषो ममैव चापल्यं यद्विवेवाभ्यर्थितेति व्यन्यते कश्चित्किञ्चित् नवोढायाः सखा सखायं पृच्छति वदतीत्याह तत्र अपीडितेत्यनेन मृदुस्पर्शसूचनद्वारेणोन्नतस्तनसूचकेन प्रौढात्वावगमात् वस्तुतस्तु स्वकीयायाः धीरायाः परिज्ञातपतिदोषाया मानवत्याः सख्याग्रहेण पतिगृहं गत्वा कतिन्यागतायाः सखी किंयातमिति नायकं पृच्छन्तीं प्रति नायक आह केवलं तयाऽलिङ्गितोऽस्मि नतु प्रीतेन सापराधेन मयापीत्यर्थः ममापराधं जानत्तथापि क्षमां कुरु शपितासीति चाटुशतेनेतिभावः सरसः ॥ २० ॥

**अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनुः ॥**
**जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥२१॥**

अन्यपदत्वेन पूसिद्धमोरोदात्तं कञ्चन नायकं सस्नेहं पश्यन्तीं नायिकां प्रति सखीदूती वक्ति अतीति सुतनुस्तथाच यथा पूर्णनागरिकजनश्रेष्ठोऽयं नायकस्तथा त्वमपि समीचीनशरीरेत्यर्थः आवयोः पूमोचितमेवेति भावः इयं सस्नेहा तव दृष्टिरित्यर्थः निःस्नेहानर्थकारिण्येति भावः किंभूता दृष्टिः अतिपूजितातिपूशस्ता तारा ताराकाक्षिकनीनिका यस्या सेत्यर्थः पक्षेऽत्यर्थं गुरुपरंपरयापूजिता उपासिता तारा अग्रतारा यस्यामित्यर्थः जिनस्य तारोपासकत्वादितिभावः श्रुत्योः श्रवणयोर्लङ्घनं समीपगमनं तत्क्षमातिदीर्घेति यावत् पक्षे श्रुतीनां वेदानां लङ्घने तदुदिताकरणे क्षमा स...त्यर्थः जिनमते वेदस्य धुर्तोक्तत्वादितिभावः तथाच बहिर्मुखकारस्य...कराह्य...दृष्टाग्नं यथा सुकरं तथा श्रुतिलङ्घनक्षमायास्तव दृष्टेः पलायनमत्यन्तं सुकरमिति भावः सवासना सुरतमंभुनपद्मगन्धयुक्ता तव पद्मिनीत्वादितिभावः पक्षे वासना ... विशेषस्तत्सहितेत्यर्थः जिनमते सर्वस्य पदार्थस्य क्षणिकत्वेन पूत्यभिज्ञादिनियामकत्वेन वासनायाः स्वीकारात्पूर्वपूर्वक्षणिकविज्ञानसंक्रमादुत्तरोत्तरं ब्यवहार

यथा कस्तूरी वासितवस्त्रसंबन्धे वस्त्रान्तरस्येति जिनस्य नास्तिकविशेषस्य सिद्धान्तस्य राद्धान्तस्य स्थितिः स्वरूपमिवेत्यर्थः कं न मोहयति कं नाधीनं करोति अपितु सर्वानितिभावः पक्षे सर्वदर्शनाज्ञमपि मोहयति श्रवणेनस्व शास्त्रे भ्रान्तं करोतीत्यर्थः तथाच तवैव गुणेनान्यसकलनायिका दुर्लभोपि अयं तवाज्ञामात्रेणाधीनः क्रियते पश्य मम सामर्थ्यमिति सखीदूती नायिकां प्रोत्साहितवतीति वाक्यार्थः नायको नायिकां वदतीत्येके सखी नायिकां वदतीत्यपरे ॥ २१ ॥

अलमविषयभयलज्जावञ्चितमात्मानमियमियत्समयम् ॥
नवपरिचितदयितगुणाशोचतिनालपतिशयनसखी ॥२२॥

काञ्चिन्नवोढां भयलज्जाभ्यां पतिगृहगमनमनिच्छन्तीं प्रौढासख्याह अलमिति इयं प्रतिवेशिनी आत्मानं शोचति आत्मनः शोकं करोतीत्यर्थः नवपरिचित दयितगुणा अचिरानुभूतपतिसंगमसुखा शयनकारणीः सखीर्नालपति भवतीभिरपि नाहं बलात्कारेण पतिसमीपे शायितेतिकोपात् न वदतीत्यर्थः मदनिग्रहकारित्वादतीतत्वेन कालस्य प्रयोजनाभावाच्चेति भावः इयत्समयमतिदीर्घकालं स्वल्पेऽपि कालेऽतिप्रीततया दैर्घ्यसूचने इयदितिअविषये अस्थाने निर्हेतुके इति यावत् ये भयलज्जे ताभ्यां वञ्चितः प्रतारितः सुखरहितः य आत्मा तमित्यर्थः अलमित्यस्यात्रैवान्वयः शोचनक्रियायां वा तथाच यथा तव प्रतिवेशिनीयं सखीभिर्बलात्कारेण पतिगृहं न नीता प्रथमं पश्चाज्जातसङ्गमा सत्कामौत्सुक्य-मात्मशोचनञ्च करोति एवमेवास्मदुक्ताकरणे त्वमपि करिष्यसीति हठं विहाय निजसौख्यार्थं पतिगृहमभयया निर्लज्जया चावश्यं गन्तव्यमित्युपदेशो व्यज्यते पतिगृहागतां विमनस्कां प्रौढां वीक्ष्य काचित्काञ्चित्पृच्छति किमर्थमद्यापि विमनस्केयमत्राप्याह न पतिदोषेणविमनस्कत्वका किन्तु सखीदोषेणेति ॥ २२ ॥

अनुरागवति नातव विरहेणाभेशु सा गृहीताङ्गी ॥
[illegible] गौरी वरतनुरर्धा वशिष्टैव ॥ २३ ॥

नायिकानि[illegible]भिव्य नायिकासखी नायकं प्रति वदति अनुरागेति सा मम सखी तव नायकस्य विरहेण गृहीतं कुङ्कमङ्ग पक्षे गृहीतं स्वाङ्गे स्थापितमङ्गं यस्या इत्यर्थः गृहीताङ्गी सती वरतनुः अर्धावशिष्टैवार्धशरीरापिजीवत्येवेति महदा-श्चर्य्यमित्यर्थ विरहेण किन्नूनमनुरागेणप्रेम्णा वर्धितं [illegible] १ नैं

